स्वव्यासद्विगुणादुच्चमष्टांशं वाधिकं भवेत् ।
अथवाल्पकनिष्ठानां व्यासे सप्तविभागके ॥ २२ ॥

षडङ्गाधिकमुच्चं स्यान्मध्यानां पञ्च चाधिकम् ।
त्र्यंशाधिकं चोत्तमानां प्रासादानामिहोन्नतिः ॥ २३ ॥

यथाधिकारं प्रासादा देवादीनां समृद्धिदाः ।
ब्रह्मविष्णुशिवानां चाप्युत्तमं चक्रवर्तिनाम् ॥ २४ ॥

शस्तं द्वादशभौमं स्यान्नान्येषां तद् विधीयते ।
त्रयस्त्रिंशत्सुराणां च यक्षनागेन्द्रवेधसाम् ॥ २५ ॥

एकादशतलं शस्तं द्वितलं शशिसूर्ययोः ।
महाराजाधिराजानां विमानं नवभूमिकम् ॥ २६ ॥

अष्टभौमं तु गन्धर्वसिद्धविद्याधरोचितम् ।
सप्तभौमं द्विजेन्द्राणां नृपाणां च समृद्धिदम् ॥ २७ ॥

षड्भौमं मण्डलेन्द्राणां पञ्च स्युर्यौवराजकम् ।
सामन्तानां चतुर्भौमं पुरेशानां च शस्यते ॥ २८ ॥

श्रीमतां वैश्यशूद्राणां सेनेशानां त्रिभौमकम् ।
द्वितलं चैकभौमं च सर्वदेवनरोचितम् ॥ २९ ॥

अत्र —

यदुक्तं तु द्विजातीनामन्येषां तलसंख्यकम् ।
तत् सर्वं द्युसदामिष्टं द्विजेन्द्रोक्तं च भूभुजाम् ॥ ३० ॥

वैश्योक्तं चैव शूद्राणां द्विजानां सर्वमेव वा ।
हीनानां नाधिकोक्तं स्यादिति प्राह पराशरः ॥ ३१ ॥

विमानाच्छतहस्तोच्चादधिकं न कलौ स्मृतम् ।
महावातादिपीडाभिः पीड्यते यदतोऽधिकम् ॥ ३२ ॥

स्वव्यासार्धाद् गर्भगृहमविशेषोदिते भवेत् ।
विमानव्यासनन्दांशात् कूटशालाविशालता ॥ ३३ ॥

---

१. 'मादिष्टं' क. ख. पाठः. २. 'ने' ग. पाठः.

विस्तारद्विगुणायामो युग्मायुग्मे च कोष्ठके ।
पञ्जरालिन्दके तुल्ये भागार्धार्धारिको भवेत् ॥ ३४ ॥
पञ्चत्र्यंशमलिन्दं वा गृहपिण्ड्यादि शेषतः ।

तलविभागाधिकारः ।

---

कायश्चाप्यनुकायश्च प्रासादाङ्गं द्विधा स्मृतम् ॥ ३५ ॥
अधिष्ठानं तथा स्तम्भो भित्तिः कुम्भश्च मण्डिकाः ।
पोतिका स्याद् भारतुला जयन्तय इति क्रमात् ॥ ३६ ॥
अनुमार्गाश्च कायः स्यादनुकायोऽथ कथ्यते ।
उत्तरं वाजनं श्रेणी बलीकं कर्णपत्रिका ॥ ३७ ॥
सन्धिद्वारकपाटानि योगः प्रच्छादनानि च ।
कुम्भवल्ली तोरणानि मुष्टिबन्धाष्टमङ्गलैः ॥ ३८ ॥
मृणालिका दण्डिका च निर्प्रहाराश्च नासिकाः ।
पट्टिका वलभी बन्धवेदिका जालकानि च ॥ ३९ ॥
कर्णकूटास्तथा कूटा नीडकोष्ठादयोऽपि च ।
ऊर्ध्वप्रच्छादविन्याससुधालोष्टेष्टकादयः ॥ ४० ॥
अनुकायाभिधानानि सामान्यानि भवन्ति हि ।
देशोचितानि क्षुद्राल्पविमानानि भवन्ति हि ॥ ४१ ॥
नागरं द्राविलं चैव वेसरं च त्रिधा मतम् ।
चतुरश्रं वायताश्रं नागरं तत् प्रचक्षते ॥ ४२ ॥
षडश्रं वाथवाष्टाश्रं समं वा दीर्घमेव वा ।
द्राविलं सौधमुद्दिष्टं वेदाश्रं वा गलादधः ॥ ४३ ॥
कण्ठादुपरि चाष्टाश्रं तदपि द्राविलं स्मृतम् ।
वृत्तं वृत्तायतं वापि द्व्यश्रं वृत्तमथापि वा ॥ ४४ ॥
कण्ठादधस्ताद् वेदाश्रं तदूर्ध्वं वर्तुलं च यत् ।
विमानं वेसराख्यं स्यात् त्रयं तत्त्रिगुणं स्मृतम् ॥ ४५ ॥

---

१. 'प' क. ख. पाठः.

सात्त्विकं नागरं तत् स्याद् राजसं द्राविलं स्मृतम् ।
तामसं वेसरं चेति त्रयं ब्रह्मादिदैवतम् ॥ ४६ ॥

त्रियुगं तत् त्रिवर्णं च त्रितत्त्वं च क्रमात् स्मृतम् ।
नागरस्य स्मृतो देशो हिमवद्विन्ध्यमध्यगः ॥ ४७ ॥

द्राविलस्योचितो देशो द्राविडः स्यान्न चान्यथा ।
आगस्त्यविन्ध्यमध्यस्थो देशो वेसरसम्मतः ॥ ४८ ॥

सर्वाणि सर्वदेशेषु भवन्तीत्यपि केचन ।
समासादत्र सामान्यं तलनिर्माणमिष्यते ॥ ४९ ॥

त्रिपञ्चसप्तनवभिः करैरेकतलं स्मृतम् ।
रुद्रातिजगतीसंख्यैर्हस्तैः स्याद् द्वितलं पुनः ॥ ५० ॥

त्रितलं पञ्चदशभिः कुर्यात् सप्तदशैव तु ।
अत ऊर्ध्वं प्रतितलं पञ्चहस्तविवर्धनात् ॥ ५१ ॥

आद्वादशतलं धाम्नां यथावन्मानमूहयेत् ।
अल्पोत्तमविमानानां व्यासाद् द्विगुण उच्छ्रयः ॥ ५२ ॥

द्विगुणात् सप्तमांशोनमल्पमध्येषु तुङ्गता ।
तस्मादर्धांशहीनः स्यादुत्सेधोऽल्पाधमस्य तु ॥ ५३ ॥

व्यासेऽभिकृतिकोष्ठे स्यात् पीठं कोष्ठेन मध्यतः ।
तद्बहिर्वसुकोष्ठानां पङ्क्त्या गर्भगृहं भवेत् ॥ ५४ ॥

कोष्ठपङ्क्त्या बहिर्भित्तिरत्र द्वारं तु कोष्ठतः ।
एकभित्त्येकतलकं दैवं धामेदमीरितम् ॥ ५५ ॥

तद्वत् प्रासादविस्तारस्यैकाशीतिपदस्य तु ।
मध्यस्थनवकोष्ठे स्यात् सपीठं गर्भमन्दिरम् ॥ ५६ ॥

तद्बाह्ये कोष्ठपङ्क्त्या तु भित्तिं द्वारं च कल्पयेत् ।
तद्बाह्यपङ्क्त्या परितः कल्पयेन्मध्यनाडिकाम् ॥ ५७ ॥

प्रासादभित्तिं तद्बाह्ये पङ्क्त्या द्वारं च योजयेत् ।
प्राच्यां वा पश्चिमे भित्त्योर्द्वारमेकैककोष्ठतः ॥ ५८ ॥

एवं चाल्पविमानानि भिन्नानि यथारुचि ।
एकभौमानि वा कुर्यात् त्रिभूम्यन्तानि शक्तितः ॥ ५९ ॥

एतेषामाद्यविस्ताराद् द्विगुणः स्यादिहोच्छ्रयः ।
उच्छ्रये चाष्टधा भक्ते स्यादधिष्ठानमंशतः ॥ ६० ॥

स्तम्भोत्सेधस्तु भागाभ्यां प्रस्तरश्चैकभागिकः ।
कण्ठश्चांशेन शिखरं द्वाभ्यां स्थूपिस्तथांशतः ॥ ६१ ॥

एवं धामैकतलकं द्वितलं च समूहयेत् ।
तत्राधिष्ठानतुङ्गस्य त्रिधा भक्तस्य भागशः ॥ ६२ ॥

भागेन जगतीं कुर्यादंशेन कुमुदं तथा ।
शिष्टभागे तु वेदांशे कुर्यादंशेन पट्टिकाम् ॥ ६३ ॥

स्यादंशेनान्तरं शेषावंशौ प्रतिमुखं भवेत् ।
अल्पक्षुद्रविमानानामाधिष्ठानमिदं भवेत् ॥ ६४ ॥

मुख्यजातीतराणां च जात्यानां च यथोचितम् ।
विमानानामधिष्ठानं सोपपीठं निगद्यते ॥ ६५ ॥

मसूरकं चाधिष्ठानं वस्त्वाधारं च कुट्टिमम् ।
तलं चाद्याङ्गमिति च शब्दाः पर्यायवाचकाः ॥ ६६ ॥

प्रासादस्तु निर्जरैरङ्गैरधितिष्ठति यं सदा ।
दृढं शिलादिघटितं तदधिष्ठानसंज्ञितम् ॥ ६७ ॥

पूर्वमुक्तप्रकारेण स्थले दृढतरं चिते ।
गर्भन्यासं च कृत्वादावुपपीठं तु योजयेत् ॥ ६८ ॥

अधोऽधिष्ठानकानां स्यादुपपीठं भवेद् यदि ।
उन्नत्यर्थं च शोभार्थं रक्षार्थं च विशेषतः ॥ ६९ ॥

वेदीभद्रं प्रतिभद्रं सुभद्रं च त्रिधा मतम् ।
अर्कांशे तूपपीठोच्चैरुपानद्व्यंशमंशतः ॥ ७० ॥

पद्मं क्षेपणमर्धांशाद् ग्रीवा पञ्चांशतो भवेत् ।
अर्धेन कम्पस्तस्योर्ध्वमब्जं चांशेन वाजनम् ॥ ७१ ॥

---

१. 'च्चे उपा' क. ख. पाठः.

शिष्टांशेनोर्ध्वकम्पश्चेत्यष्टाङ्गमुपपीठकम् ।
षडङ्गं वा विधातव्यमूर्ध्वाधः पङ्कजं विना ॥ ७२ ॥
वेदीभद्रमिदं प्रोक्तं सर्वहर्म्योचितं द्विधा ।
अश्विदृक्च्छिवभागैस्तु[१] भानुभागांशकांशकैः ॥ ७३ ॥
रामांशांशकभागैस्तु द्वाभ्यामंशेन योजयेत् ।
जन्मनो वाजनान्तं तत्तुङ्गे त्रिनवभागिके ॥ ७४ ॥
पादुकं पङ्कजं कम्पः कण्ठमुत्तरमम्बुजम् ।
कपोतालिङ्गकान्तादि प्रतिवाजनमुच्यते ॥ ७५ ॥
प्रातिभद्राह्वयं त्वेतत् सर्वालङ्कारसंयुतम् ।
प्रकृत्यंशे तदुत्सेधे भागाभ्यां जन्म चाम्बुजम् ॥ ७६ ॥
अर्धेन गलमर्धेन पद्मं द्व्यंशं तु वाजनम् ।
अर्धेनाब्जं तथा कम्पमष्टौ कण्ठोऽशमुत्तरम् ॥ ७७ ॥
अर्धेनाब्जं तु गोपानं त्रिभिः स्यात् कम्पमूर्ध्वतः ।
सुभद्रकमिदं नाम्ना कथितं ह्युपपीठकम् ॥ ७८ ॥
सिंहेभमकरव्यालभूतपत्राद्यलङ्कृतम् ।
प्रतिवक्त्रझषास्यं स्याद् बालेनारूढमस्तकम् ॥ ७९ ॥

अत्र मयः---

"आत्ताधिष्ठानतुङ्गाद् द्विगुणमथ समं सार्धमर्धत्रिपादं
पञ्चांशं द्व्यंशकं वानलसममिति त्रिद्व्येकमात्रोपपीठम् ।
सप्रत्यङ्गं समङ्गं तदपि च महता वाजनेनोपयुक्तं
सर्वेषां चापि धाम्नां दृढमुचितमधो योजयेत् तूपपीठम् ॥"

इति श्रीमदीशानशिवगुरुदेवपद्धतौ सिद्धान्तसारे उपरिभागे
क्रियापादे जात्यादिविमानविभागोपपीठविधि-
पटलस्त्रिंशः ॥

---

शुभं भूयात् ।

---

१. 'भगा' ख. पाठः. 'जात्यादिविभागविमानोपपीठः' ग. पाठः.

# स्मृतग्रन्थकर्तारः ।